तुग्रो ह भुज्युमश्विनोदमेघे रयिं न कश्चिन्ममृवाँ अवाहाः ।
तमूहथुर्नौभिरात्मन्वतीभिरन्तरिक्षप्रुद्भिरपोदकाभिः ॥ ३ ॥

तिस्रः क्षपस्त्रिरहातिव्रजद्भिर्नासत्या भुज्युमूहथुः पतङ्गैः ।
समुद्रस्य धन्वन्नार्द्रस्य पारे त्रिभी रथैः शतपद्भिः षळश्वैः ॥ ४ ॥

अनारम्भणे तदवीरयेथामनास्थाने अग्रभणे समुद्रे ।
यदश्विना ऊहथुर्भुज्युमस्तं शतारित्रां नावमातस्थिवांसम् ॥ ५ ॥ ८ ॥

यमश्विना ददथुः श्वेतमश्वमघाश्वाय शश्वदित्स्वस्ति ।
तद्वां दात्रं महि कीर्तेन्यं भूत्पैद्वो वाजी सदमिद्धव्यो अर्यः ॥ ६ ॥

युवं नरा स्तुवते पज्रियाय कक्षीवते अरदतं पुरंधिम् ।
कारोतराच्छफादश्वस्य वृष्णः शतं कुम्भाँ असिञ्चतं सुरायाः ॥ ७ ॥

---

तुग्रः । ह । भुज्युं । अश्विना । उदऽमेघे । रयिं । न । कः । चित् । ममृऽवान् । अवं । अहाः । तं । ऊहथुः । नौभिः । आत्मन्ऽवतीभिः । अंतरिक्षप्रुत्ऽभिः । अपऽउदकाभिः ॥ ३ ॥ तिस्रः । क्षपः । त्रिः । अहा । अतिव्रजंत्ऽभिः । नासत्या । भुज्युं । ऊहथुः । पतंगैः । समुद्रस्यं । धन्वन् । आर्द्रस्य । पारे । त्रिऽभिः । रथैः । शतपत्ऽभिः । षट्ऽअश्वैः ॥ ४ ॥ अनारंभणे । तत् । अवीरयेथां । अनास्थाने । अग्रभणे । समुद्रे । यत् । अश्विनौ । ऊहथुः । भुज्युं । अस्तं । शतऽअरित्रां । नावं । आ । तस्थिऽवांसं ॥ ५ ॥ ८ ॥ यं । अश्विना । ददथुः । श्वेतं । अश्वं । अघऽअश्वाय । शश्वत् । इत् । स्वस्ति । तत् । वां । दात्रं । महि । कीर्तेन्यं । भूत् । पैद्वः । वाजी । सदं । इत् । हव्यः । अर्यः ॥ ६ ॥ युवं । नरा । स्तुवते । पज्रियाय । कक्षीवते । अरदतं । पुरंऽधिं । कारोतरात् । शफात् । अश्वस्य । वृष्णः । शतं । कुंभान् । असिंचतं । सुरायाः ॥ ७ ॥

हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तं ।
ऋबीसे अत्रिमश्विनावंनीतमुन्निन्यथुः सर्वगणं स्वस्ति ॥ ८ ॥
परावतं नासत्यानुदेथामुच्चाबुंध्नं चक्रथुर्जिह्मबारम् ।
क्षरन्नापो न पायनाय राये सहस्राय तृष्यंते गोतंमस्य ॥ ९ ॥
जुजुरुषो नासत्योत वव्रिं प्रामुञ्चतं द्रापिमिव च्यवानात् ।
प्रातिरतं जहितस्यायुर्दस्रादित्पतिमकृणुतं कनीनाम् ॥ १० ॥ ९ ॥
तद्वां नरा शंस्यं राध्यं चाभिष्टिमन्नासत्या वरूथम् ।
यद्विद्वांसा निधिमिवापंगूळ्हमुद्दर्शतादूपथुर्वंदनाय ॥ ११ ॥
तद्वां नरा सनये दंसं उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम् ।
दध्यङ् ह यन्मध्वाथर्वणो वामश्वंस्य शीर्ष्णा प्र यदीमुवाचं ॥ १२ ॥

---

हिमेनं । अग्निं । घ्रंसं । अवारयेथां । पितुऽमतीं । ऊर्जं । अस्मै । अधत्तं । ऋबीसे । अत्रिं । अश्विना । अवंऽनीतं । उत् । निन्यथुः । सर्वंऽगणं । स्वस्ति ॥ ८ ॥ परा । अवतं । नासत्या । अनुदेथां । उच्चाऽबुंध्नं । चक्रथुः । जिह्मऽबारं । क्षरंन् । आपंः । न । पायनाय । राये । सहस्राय । तृष्यंते । गोतंमस्य ॥ ९ ॥ जुजुरुषंः । नासत्या । उत । वव्रिं । प्र । अमुंचतं । द्रापिंऽइव । च्यवानात् । प्र । अतिरतं । जहितस्यं । आयुंः । दस्रा । आत् । इत् । पतिं । अकृणुतं । कनीनां ॥ १० ॥ ९ ॥ तत् । वां । नरा । शंस्यं । राध्यं । च । अभिष्टिऽमत् । नासत्या । वरूथं । यत् । विद्वांसा । निधिंऽइव । अपंऽगूळ्हं । उत् । दर्शतात् । ऊपथुः । वंदनाय ॥ ११ ॥ तत् । वां । नरा । सनयें । दंसंः । उग्रं । आविः । कृणोमि । तन्यतुः । न । वृष्टिं । दध्यङ् । ह । यत् । मधु । आथर्वणः । वां । अश्वंस्य । शीर्ष्णा । प्र । यत् । ईं । उवाचं ॥ १२ ॥

अजोहवीन्नासत्या करा वां महे यामन्पुरुभुजा पुरंधिः ।
श्रुतं तच्छासुरिव वध्रिमत्या हिरण्यहस्तमश्विनावदत्तम् ॥ १३ ॥
आस्नो वृकस्य वर्तिकामभीके युवं नरा नासत्यामुमुक्तम् ।
उतो कविं पुरुभुजा युवं ह कृपमाणमकृणुतं विचक्षे ॥ १४ ॥
चरित्रं हि वेरिवाच्छेदि पर्णमाजा खेलस्य परितक्म्यायाम् ।
सद्यो जङ्घामायसीं विश्पलायै धने हिते सर्तवे प्रत्यधत्तम् ॥ १५ ॥ १० ॥
शतं मेषान्वृक्ये चक्षदानमृज्राश्वं तं पितान्धं चकार ।
तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन् ॥ १६ ॥
आ वां रथं दुहिता सूर्यस्य कार्ष्मेवातिष्ठदर्वता जयन्ती ।
विश्वे देवा अन्वमन्यन्त हृद्भिः समु श्रिया नासत्या सचेथे ॥ १७ ॥

---

अजोहवीत् । नासत्या । करा । वां । महे । यामन् । पुरुऽभुजा । पुरंऽधिः । श्रुतं । तत् । शासुःऽइव । वध्रिऽमत्याः । हिरण्यऽहस्तं । अश्विनौ । अदत्तं ॥ १३ ॥ आस्नः । वृकस्य । वर्तिकां । अभीके । युवं । नरा । नासत्या । अमुमुक्तं । उतो इति । कविं । पुरुऽभुजा । युवं । ह । कृपमाणं । अकृणुतं । विऽचक्षे ॥ १४ ॥ चरित्रं । हि । वेःऽइव । अच्छेदि । पर्णं । आजा । खेलस्य । परिऽतक्म्यायां । सद्यः । जंघां । आयसीं । विश्पलायै । धने । हिते । सर्तवे । प्रति । अधत्तं ॥ १५ ॥ १० ॥ शतं । मेषान् । वृक्ये । चक्षदानं । ऋज्रऽअश्वं । तं । पिता । अंधं । चकार । तस्मै । अक्षी इति । नासत्या । विऽचक्षे । आ । अधत्तं । दस्रा । भिषजौ । अनर्वन् ॥ १६ ॥ आ । वां । रथं । दुहिता । सूर्यस्य । कार्ष्मऽइव । अतिष्ठत् । अर्वता । जयंती । विश्वे । देवाः । अनु । अमन्यंत । हृत्ऽभिः । सं । ऊं इति । श्रिया । नासत्या । सचेथे । इति ॥ १७ ॥

यदयातं दिवोदासाय वर्तिर्भरद्वाजायाश्विना हयन्ता ।
रेवदुवाह सचनो रथो वां वृषभश्च शिंशुमारश्च युक्ता ॥ १८ ॥
रयिं सुक्षत्रं स्वपत्यमायुः सुवीर्यं नासत्या वहन्ता ।
आ जह्नावीं समनसोप वाजैस्त्रिरह्नो भागं दधतीमयातम् ॥ १९ ॥
परिविष्टं जाहुषं विश्वतः सीं सुगेभिर्नक्तमूहथू रजोभिः ।
विभिन्दुना नासत्या रथेन वि पर्वताँ अजरयू अयातम् ॥ २० ॥ ११ ॥
एकस्या वस्तोरावतं रणाय वशमश्विना सनये सहस्रा ।
निरहतं दुच्छुना इन्द्रवन्ता पृथुश्रवसो वृषणावरातीः ॥ २१ ॥
शरस्य चिदार्चत्कस्यावतादा नीचादुच्चा चक्रथुः पातवे वाः ।
शयवे चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गाम् ॥ २२ ॥

---

यत् । अयातं । दिवःऽदासाय । वर्तिः । भरत्ऽवाजाय । अश्विना । हयन्ता । रेवत् । उवाह । सचनः । रथः । वां । वृषभः । च । शिंशुमारः । च । युक्ता ॥ १८ ॥
रयिं । सुऽक्षत्रं । सुऽअपत्यम् । आयुः । सुऽवीर्यं । नासत्या । वहन्ता । आ । जह्नावीं । सऽमनसा । उप । वाजैः । त्रिः । अह्नः । भागं । दधतीं । अयातं ॥ १९ ॥
परिऽविष्टं । जाहुषं । विश्वतः । सीं । सुऽगेभिः । नक्तं । ऊहथुः । रजःऽभिः । विऽभिन्दुना । नासत्या । रथेन । वि । पर्वतान् । अजरयू इति । अयातं ॥ २० ॥ ११ ॥
एकस्याः । वस्तोः । आवतं । रणाय । वशं । अश्विना । सनये । सहस्रा । निः । अहतं । दुच्छुनाः । इन्द्रऽवन्ता । पृथुऽश्रवसः । वृषणौ । अरातीः ॥ २१ ॥ शरस्य । चित् । आर्चत्ऽकस्य । अवतात् । आ । नीचात् । उच्चा । चक्रथुः । पातवे । वाः इति । वा । शयवे । चित् । नासत्या । शचीभिः । जसुरये । स्तर्यं । पिप्यथुः । गां ॥ २२ ॥

अवस्यते स्तुवते कृष्णियाय ऋजूयते नासत्या शचीभिः ।
पशुं न नष्टमिव दर्शनाय विष्णाप्वं ददथुर्विश्वकाय ॥ २३ ॥
दश रात्रीरशिवेना नव द्यूनवनद्धं श्नथितमप्स्वन्तः ।
विप्रुतं रेभमुदनि प्रवृक्तमुन्निन्यथुः सोममिव स्रुवेण ॥ २४ ॥
प्र वां दंसांस्यश्विनाववोचमस्य पतिः स्यां सुगवः सुवीरः ।
उत पश्यन्नश्नुवन्दीर्घमायुरस्तमिवेज्जरिमाणं जगम्याम् ॥ २५ ॥ १२ ॥

॥ ११७ ॥ ऋषिः–कक्षीवान् । देवता–अश्विनौ । छन्द–त्रिष्टुप् ॥

॥ ११७ ॥ मध्वः सोमस्याश्विना मदाय प्रत्नो होता विवासते वां ।
बर्हिष्मती रातिर्विश्रिता गीरिषा यातं नासत्योप वाजैः ॥ १ ॥
यो वामश्विना मनसो जवीयान्रथः स्वश्वो विश आजिगाति ।
येन गच्छथः सुकृतो दुरोणं तेन नरा वर्तिरस्मभ्यं यातम् ॥ २ ॥

---

अवस्यते । स्तुवते । कृष्णियाय । ऋजुऽयते । नासत्या । शचीभिः । पशुं । न । नष्टंऽइव । दर्शनाय । विष्णाप्वं । ददथुः । विश्वकाय ॥ २३ ॥ दश । रात्रीः । अशिवेन । नव । द्यून् । अवऽनद्धं । श्नथितं । अप्ऽसु । अंतरिति । विऽप्रुतं । रेभं । उदनि । प्रऽवृक्तं । उत् । निन्यथुः । सोमंऽइव । स्रुवेण ॥ २४ ॥ प्र । वां । दंसांसि । अश्विनौ । अवोचं । अस्य । पतिः । स्यां । सुऽगवः । सुऽवीरः । उत । पश्यन् । अश्नुवन् । दीर्घं । आयुः । अस्तंऽइव । इत् । जरिमाणं । जगम्यां ॥ २५ ॥ १२ ॥

मध्वः । सोमस्य । अश्विना । मदाय । प्रत्नः । होता । आ । विवासते । वां । बर्हिष्मती । रातिः । विऽश्रिता । गीः । इषा । यातं । नासत्या । उप । वाजैः ॥ १ ॥ यः । वां । अश्विना । मनसः । जवीयान् । रथः । सुऽअश्वः । विशः । आऽजिगाति । येन । गच्छथः । सुऽकृतः । दुरोणं । तेन । नरा । वर्तिः । अस्मभ्यं । यातं ॥ २ ॥

ऋषिं नरावंहसः पाञ्चजन्यमृबीसादत्रिं मुञ्चथो गणेन ।
मिनन्ता दस्योरशिवस्य माया अनुपूर्वं वृषणा चोदयन्ता ॥ ३ ॥
अश्वं न गूळ्हमश्विना दुरेवैर्ऋषिं नरा वृषणा रेभमप्सु ।
सं तं रिणीथो विप्रुतं दंसोभिर्न वां जूर्यन्ति पूर्व्या कृतानि ॥ ४ ॥
सुषुप्वांसं न निर्ऋतेरुपस्थे सूर्यं न दस्रा तमसि क्षियन्तम् ।
शुभे रुक्मं न दर्शतं निखातमुदूपथुरश्विना वन्दनाय ॥ ५ ॥ १३ ॥
तद्वां नरा शंस्यं पज्रियेण कक्षीवता नासत्या परिज्मन् ।
शफादश्वस्य वाजिनो जनाय शतं कुम्भाँ असिञ्चतं मधूनाम् ॥ ६ ॥
युवं नरा स्तुवते कृष्णियाय विष्णाप्वं ददथुर्विश्वकाय ।
घोषायै चित्पितृषदे दुरोणे पतिं जूर्यन्त्या अश्विनावदत्तं ॥ ७ ॥

---

ऋषिं । नरौ । अंहसः । पांचऽजन्यं । ऋबीसात् । अत्रिं । मुंचथः । गणेन । मिनंता । दस्योः । अशिवस्य । मायाः । अनुऽपूर्वं । वृषणा । चोदयंता ॥ ३ ॥ अश्वं । न । गूळ्हं । अश्विना । दुःऽएवैः । ऋषिं । नरा । वृषणा । रेभं । अपऽसु । सं । तं । रिणीथः । विऽप्रुतं । दंसःऽभिः । न । वां । जूर्यंति । पूर्व्या । कृतानि ॥ ४ ॥ सुसुप्वांसं । न । निःऽऋतेः । उपऽस्थे । सूर्यं । न । दस्रा । तमसि । क्षियंतं । शुभे । रुक्मं । न । दर्शतं । निऽखातं । उत् । ऊपथुः । अश्विना । वंदनाय ॥५॥१३॥ तत् । वां । नरा । शंस्यं । पज्रियेण । कक्षीवता । नासत्या । परिऽज्मन् । शफात् । अश्वस्य । वाजिनः । जनाय । शतं । कुंभान् । असिंचतं । मधूनां ॥ ६ ॥ युवं । नरा । स्तुवते । कृष्णियाय । विष्णाप्वं । ददथुः । विश्वकाय । घोषायै । चित् । पितृऽसदे । दुरोणे । पतिं । जूर्यंत्यै । अश्विनौ । अदत्तं ॥ ७ ॥

युवं श्यावाय रुशतीमदत्तं महः क्षोणस्याश्विना कण्वाय ।
प्रवाच्यं तद्वृषणा कृतं वां यन्नार्षदाय श्रवो अध्यधत्तम् ॥ ८ ॥

पुरू वर्पांस्यश्विना दधाना नि पेदव ऊहथुराशुमश्वम् ।
सहस्रसां वाजिनमप्रतीतमहिहनं श्रवस्यं तरुत्रम् ॥ ९ ॥

एतानि वां श्रवस्या सुदानू ब्रह्माङ्गूषं सदनं रोदस्योः ।
यद्वां पज्रासो अश्विना हवन्ते यातमिषा च विदुषे च वाजम् ॥ १० ॥ १४ ॥

सूनोर्मानेनाश्विना गृणाना वाजं विप्राय भुरणा रदन्ता ।
अगस्त्ये ब्रह्मणा वावृधाना सं विश्पलां नासत्यारिणीतम् ॥ ११ ॥

कुह यान्ता सुष्टुतिं काव्यस्य दिवो नपाता वृषणा शयुत्रा ।
हिरण्यस्येव कलशं निखातमुदूपथुर्दशमे अश्विनाहन् ॥ १२ ॥

---

युवं । श्यावाय । रुशतीं । अदत्तं । महः । क्षोणस्य । अश्विना । कण्वाय । प्रऽवाच्यं । तत् । वृषणा । कृतं । वां । यत् । नार्सदाय । श्रवः । अधिऽअधत्तं ॥ ८ ॥ पुरु । वर्पांसि । अश्विना । दधाना । नि । पेदवे । ऊहथुः । आशुं । अश्वं । सहस्रऽसां । वाजिनं । अप्रतिऽइतं । अहिऽहनं । श्रवस्यं । तरुत्रं ॥ ९ ॥ एतानि । वां । श्रवस्या । सुदानू इति सुऽदानू । ब्रह्म । आंगूषं । सदनं । रोदस्योः । यत् । वां । पज्रासः । अश्विना । हवंते । यातं । इषा । च । विदुषे । च । वाजं ॥ १० ॥ १४ ॥ सूनोः । मानेन । अश्विना । गृणाना । वाजं । विप्राय । भुरणा । रदंता । अगस्त्ये । ब्रह्मणा । ववृधाना । सं । विश्पलां । नासत्या । अरिणीतं ॥ ११ ॥ कुह । यांता । सुऽस्तुतिं । काव्यस्य । दिवः । नपाता । वृषणा । शयुऽत्रा । हिरण्यस्यऽइव । कलशं । निऽखातं । उत् । ऊपथुः । दशमे । अश्विना । अहन् ॥ १२ ॥

युवं च्यवानमश्विना जरन्तं पुनर्युवानं चक्रथुः शचीभिः ।
युवो रथं दुहिता सूर्यस्य सह श्रिया नासत्यावृणीत ॥ १३ ॥

युवं तुग्राय पूर्व्येभिरेवैः पुनर्मन्यावभवतं युवाना ।
युवं भुज्युमर्णसो निः समुद्राद्विभिरूहथुर्ऋज्रेभिरश्वैः ॥ १४ ॥

अजोहवीदश्विना तौग्र्यो वां प्रोळ्हः समुद्रमव्यथिर्जगन्वान् ।
निष्टमूहथुः सुयुजा रथेन मनोजवसा वृषणा स्वस्ति ॥ १५ ॥ १५ ॥

अजोहवीदश्विना वर्तिका वामास्नो यत्सीममुञ्चतं वृकस्य ।
वि जयुषा ययथुः सान्वद्रेर्जातं विष्वाचो अहतं विषेण ॥ १६ ॥

शतं मेषान्वृक्ये मामहानं तमः प्रणीतमशिवेन पित्रा ।
आक्षी ऋज्राश्वे अश्विनावधत्तं ज्योतिरन्धाय चक्रथुर्विचक्षे ॥ १७ ॥

---

युवं । च्यवानं । अश्विना । जरंतं । पुनः । युवानं । चक्रथुः । शचीभिः । युवोः । रथं । दुहिता । सूर्यस्य । सह । श्रिया । नासत्या । अवृणीत ॥ १३ ॥ युवं । तुग्राय । पूर्व्येभिः । एवैः । पुनःऽमन्यौ । अभवतं । युवाना । युवं । भुज्युं । अर्णसः । निः । समुद्रात् । विऽभिः । ऊहथुः । ऋज्रेभिः । अश्वैः ॥ १४ ॥ अजोहवीत् । अश्विना । तौग्र्यः । वां । प्रऽऊळ्हः । समुद्रं । अव्यथिः । जगन्वान् । निः । तं । ऊहथुः । सुऽयुजा । रथेन । मनःऽजवसा । वृषणा । स्वस्ति ॥ १५ ॥ १५ ॥ अजोहवीत् । अश्विना । वर्तिका । वां । आस्नः । यत् । सीं । अमुंचतं । वृकस्य । वि । जयुषा । ययथुः । सानुं । अद्रेः । जातं । विष्वाचः । अहतं । विषेण ॥ १६ ॥ शतं । मेषान् । वृक्ये । ममहानं । तमः । प्रऽनीतं । अशिवेन । पित्रा । आ । अक्षी इति । ऋज्रऽअश्वे । अश्विनौ । अधत्तं । ज्योतिः । अंधाय । चक्रथुः । विऽचक्षे ॥ १७ ॥

शुनमन्धाय भरमह्वयत्सा वृकीरश्विना वृषणा नरेति ।
जारः कनीन इव चक्षदान ऋज्राश्वः शतमेकं च मेषान् ॥ १८ ॥
मही वामूतिरश्विना मयोभूरुत स्रामं धिष्ण्या सं रिणीथः ।
अथा युवामिदह्वयत्पुरंधिरागच्छतं सीं वृषणाववोभिः ॥ १९ ॥
अधेनुं दस्रा स्तर्यं१विषक्तामपिन्वतं शयवे अश्विना गाम् ।
युवं शचीभिर्विमदाय जायां न्यूहथुः पुरुमित्रस्य योषाम् ॥ २० ॥ १६ ॥
यवं वृकेणाश्विना वपन्तेषं दुहन्ता मनुषाय दस्रा ।
अभि दस्युं बकुरेणा धमन्तोरु ज्योतिश्चक्रथुरार्याय ॥ २१ ॥
आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतम् ।
स वां मधु प्र वोचदृतायन्त्वाष्ट्रं यद्दस्रावपिकक्ष्यं वाम् ॥ २२ ॥

---

शुनं । अंधाय । भरं । अह्वयत् । सा । वृकीः । अश्विना । वृषणा । नरा । इति ।
जारः । कनीनःऽइव । चक्षदानः । ऋज्रऽअश्वः । शतं । एकं । च । मेषान् ॥ १८ ॥
मही । वां । ऊतिः । अश्विना । मयःऽभूः । उत । स्रामं । धिष्ण्या । सं । रिणीथः ।
अथ । युवां । इत् । अह्वयत् । पुरंऽधिः । आ । अगच्छतं । सीं । वृषणौ । अवःऽभिः ॥ १९ ॥
अधेनुं । दस्रा । स्तर्यं । विऽसक्तां । अपिन्वतं । शयवे । अश्विना । गां । युवं ।
शचीभिः । विऽमदाय । जाया । नि । ऊहथुः । पुरुऽमित्रस्य । योषां ॥ २० ॥ १६ ॥
यवं । वृकेण । अश्विना । वपंता । इषं । दुहंता । मनुषाय । दस्रा । अभि । दस्युं ।
बकुरेण । धमंता । उरु । ज्योतिः । चक्रथुः । आर्याय ॥ २१ ॥ आथर्वणाय ।
अश्विना । दधीचे । अश्व्यं । शिरः । प्रति । ऐरयतं । सः । वां । मधु । प्र । वोचत् ।
ऋतऽयन् । त्वाष्ट्रं । यत् । दस्रौ । अपिऽकक्ष्यं । वां ॥ २२ ॥

युवं धेनुं शयवे नाधितायापिन्वतमश्विना पूर्व्याय ।

अमुञ्चतं वर्तिकामंहसो निः प्रति जङ्घां विश्पलाया अधत्तम् ॥ ८ ॥

युवं श्वेतं पेदव इन्द्रजूतमहिहनमश्विनादत्तमश्वम् ।

जोहूत्रमर्यो अभिभूतिमुग्रं सहस्रसां वृषणं वीड्वङ्गम् ॥ ९ ॥

ता वां नरा स्ववसे सुजाता हवामहे अश्विना नाधमानाः ।

आ न उप वसुमता रथेन गिरो जुषाणा सुविताय यातम् ॥ १० ॥

आ श्येनस्य जवसा नूतनेनास्मे यातं नासत्या सजोषाः ।

हवे हि वामश्विना रातहव्यः शश्वत्तमाया उषसो व्युष्टौ ॥ ११ ॥ १९ ॥

---

युवं । धेनुं । शयवे । नाधिताय । अपिन्वतं । अश्विना । पूर्व्याय । अमुंचतं । वर्तिका । अंहसः । निः । प्रति । जंघां । विश्पलायाः । अधत्तं ॥ ८ ॥ युवं । श्वेतं । पेदवे । इंद्रऽजूतं । अहिऽहनं । अश्विना । अदत्तं । अश्वं । जोहूत्रं । अर्यः । अभिऽभूतिं । उग्रं । सहस्रऽसां । वृषणं । वीळुऽअंगं ॥ ९ ॥ ता । वां । नरा । सु । अवसे । सुऽजाता । हवामहे । अश्विना । नाधमानाः । आ । नः । उप । वसुऽमता । रथेन । गिरः । जुषाणा । सुऽविताय । यातं ॥ १० ॥ आ । श्येनस्य । जवसा । नूतनेन । अस्मे इति । यातं । नासत्या । सऽजोषाः । हवे । हि । वां । अश्विना । रातऽहव्यः । शश्वत्ऽतमायाः । उषसः । विऽउष्टौ ॥ ११ ॥ १९ ॥

॥ ११९ ॥ ऋषिः—कक्षीवान् । देवता—अश्विनौ । छन्दः—जगती ॥

॥११९॥ आ वां रथं पुरुमायं मनोजुवं जीराश्वं यज्ञियं जीवसे हुवे ।
सहस्रकेतुं वनिनं शतद्वसुं श्रुष्टीवानं वरिवोधामभि प्रयः ॥ १ ॥
ऊर्ध्वा धीतिः प्रत्यस्य प्रयामन्यधायि शस्मन्त्समयन्त आ दिशः ।
स्वदामि घर्मं प्रति यन्त्यूतय आ वामूर्जानी रथमश्विनारुहत् ॥ २ ॥
सं यन्मिथः पस्पृधानासो अग्मत शुभे मखा अमिता जायवो रणे ।
युवोरह प्रवणे चेकिते रथो यदश्विना वहथः सूरिमा वरं ॥ ३ ॥
युवं भुज्युं भुरमाणं विभिर्गतं स्वयुक्तिभिर्निवहन्ता पितृभ्य आ ।
यासिष्टं वर्तिर्वृषणा विजेन्यं१ दिवोदासाय महि चेति वामवः ॥ ४ ॥

---

आ । वां । रथं । पुरुऽमायं । मनःऽजुवं । जीरऽअश्वं । यज्ञियं । जीवसे । हुवे । सहस्रऽकेतुं । वनिनं । शतत्ऽवसुं । श्रुष्टीऽवानं । वरिवःऽधां । अभि । प्रयः ॥ १ ॥ ऊर्ध्वा । धीतिः । प्रति । अस्य । प्रऽयामनि । अधायि । शस्मन् । सं । अयंते । आ । दिशः । स्वदामि । घर्मं । प्रति । यंति । ऊतयः । आ । वां । ऊर्जानी । रथं । अश्विना । अरुहत् ॥ २ ॥ सं । यत् । मिथः । पस्पृधानासः । अग्मत । शुभे । मखाः । अमिताः । जायवः । रणे । युवोः । अह । प्रवणे । चेकिते । रथः । यत् । अश्विना । वहथः । सूरिं । आ । वरं ॥ ३ ॥ युवं । भुज्युं । भुरमाणं । विऽभिः । गतं । स्वयुक्तिऽभिः । निऽवहंता । पितृऽभ्यः । आ । यासिष्टं । वर्तिः । वृषणा । विऽजेन्यं । दिवःऽदासाय । महि । चेति । वां । अवः ॥ ४ ॥

युवोरश्विना वपुषे युवायुजं रथं वाणी येमतुरस्य शर्ध्यम् ।
आ वां पतित्वं सख्याय जग्मुषी योषावृणीत जेन्या युवां पती ॥५॥२०॥
युवं रेभं परिषूतेरुरुष्यथो हिमेन घर्मं परितप्तमत्रये ।
युवं शयोरवसं पिप्यथुर्गवि प्र दीर्घेण वन्दनस्तार्यायुषा ॥ ६ ॥
युवं वन्दनं निर्ऋतं जरण्यया रथं न दस्रा करणा समिन्वथः ।
क्षेत्रादा विप्रं जनथो विपन्यया प्र वामत्र विधते दंसना भुवत् ॥ ७ ॥
अगच्छतं कृपमाणं परावति पितुः स्वस्य त्यजसा निबाधितम् ।
स्वर्वतीरित ऊतीर्युवोरह चित्रा अभीके अभवन्नभिष्टयः ॥ ८ ॥
उत स्या वां मधुमन्मक्षिकारपन्मदे सोमस्यौशिजो हुवन्यति ।
युवं दधीचो मन आ विवासथोऽथा शिरः प्रति वामश्व्यं वदत् ॥ ९ ॥

---

युवोः । अश्विना । वपुषे । युवाऽयुजं । रथं । वाणी इति । येमतुः । अस्य । शर्ध्यं । आ । वां । पतिऽत्वं । सख्याय । जग्मुषी । योषा । अवृणीत । जेन्या । युवां । पती इति ॥ ५ ॥ २० ॥ युवं । रेभं । परिऽसूतेः । उरुष्यथः । हिमेन । घर्मं । परिऽतप्तं । अत्रये । युवं । शयोः । अवसं । पिप्यथुः । गवि । प्र । दीर्घेण । वंदनः । तारि । आयुषा ॥ ६ ॥ युवं । वंदनं । निःऽऋतं । जरण्यया । रथं । न । दस्रा । करणा । सं । इन्वथः । क्षेत्रात् । आ । विप्रं । जनथः । विपन्यया । प्र । वां । अत्र । विधते । दंसना । भुवत् ॥ ७ ॥ अगच्छतं । कृपमाणं । पराऽवति । पितुः । स्वस्य । त्यजसा । निऽबाधितं । स्वःऽवतीः । इतः । ऊतीः । युवोः । अह । चित्राः । अभीके । अभवन् । अभिष्टयः ॥ ८ ॥ उत । स्या । वां । मधुऽमत् । मक्षिका । अरपत् । मदे । सोमस्य । औशिजः । हुवन्यति । युवं । दधीचः । मनः । आ । विवासथः । अथ । शिरः । प्रति । वां । अश्व्यं । वदत् ॥ ९ ॥

युवं पेद्वे पुरुवारमश्विना स्पृधां श्वेतं तरुतारं दुवस्यथः ।

शर्यैरभिद्युं पृतनासु दुष्टरं चर्कृत्यमिन्द्रमिव चर्षणीसहम् ॥ १० ॥ २१ ॥

॥ १२० ॥ ऋषि – कक्षीवान् । देवता-अश्विनौ । छन्दः-गायत्री ॥

॥ १२० ॥ का राधद्धोत्राश्विना वां को वां जोष उभयोः ।

कथा विधात्यप्रचेताः ॥ १ ॥

विद्वांसाविद्दुरः पृच्छेदविद्वानित्थापरो अचेताः ।

नू चिन्नु मर्ते अक्रौ ॥ २ ॥

ता विद्वांसा हवामहे वां ता नो विद्वांसा मन्म वोचेतमद्य ।

प्रार्चद्दयमानो युवाकुः ॥ ३ ॥

वि पृच्छामि पाक्याऽन देवान्वषट्कृतस्याद्भुतस्य दस्रा ।

पातं च सह्यसो युवं च रभ्यसो नः ॥ ४ ॥

---

युवं । पेद्वे । पुरुऽवारं । अश्विना । स्पृधां । श्वेतं । तरुतारं । दुवस्यथः । शर्यैः । अभिऽद्युं । पृतनासु । दुस्तरं । चर्कृत्यं । इन्द्रंऽइव । चर्षणिऽसहं ॥ १० ॥ २१ ॥

का । राधत् । होत्रा । अश्विना । वा । कः । वा । जोषे । उभयोः । कथा । विधाति । अप्रंऽचेताः ॥ १ ॥ विद्वांसौ । इत् । दुरः । पृच्छेत् । अविद्वान् । इत्था । अपरः । अचेताः । नु । चित् । नु । मर्ते । अक्रौ ॥ २ ॥ ता । विद्वांसा । हवामहे । वा । ता । नः । विद्वांसा । मन्म । वोचेतं । अद्य । प्र । आर्चत् । दयमानः । युवाकुः ॥ ३ ॥ वि । पृच्छामि । पाक्या । न । देवान् । वषट्ऽकृतस्य । अद्भुतस्य । दस्रा । पातं । च । सह्यसः । युवं । च । रभ्यसः । नः ॥ ४ ॥

प्र या घोषे भृगवाणे न शोभे यया वाचा यजति पज्रियो वाम् ।

प्रैषयुर्न विद्वान् ॥ ५ ॥ २२ ॥

श्रुतं गायत्रं तकवानस्याहं चिद्धि रिरेभाश्विना वाम् ।

आक्षी शुभस्पती दन् ॥ ६ ॥

युवं ह्यास्तं महो रन्युवं वा यन्निरततंसतम् ।

ता नो वसू सुगोपा स्यातं पातं नो वृकादघायोः ॥ ७ ॥

मा कस्मै धातमभ्यमित्रिणे नो माकुत्रा नो गृहेभ्यो धेनवो गुः ।

स्तनाभुजो अशिश्वीः ॥ ८ ॥

दुहीयन्मित्रधितये युवाकु राये च नो मिमीतं वाजवत्यै ।

इषे च नो मिमीतं धेनुमत्यै ॥ ९ ॥

---

प्र । या । घोषे । भृगवाणे । न । शोभे । यया । वाचा । यजति । पज्रियः । वाम् ।
प्र । इषऽयुः । न । विद्वान् ॥ ५ ॥ २२ ॥ श्रुतं । गायत्रं । तकवानस्य । अहं । चित् ।
हि । रिरेभ । अश्विना । वां । आ । अक्षी इति । शुभः । पती इति । दन् ॥ ६ ॥
युवं । हि । आस्तं । महः । रन् । युवं । वा । यत् । निःऽअततंसतं । ता । नः । वसू
इति । सुऽगोपा । स्यातं । पातं । नः । वृकात् । अघऽयोः ॥ ७ ॥ मा । कस्मै । धातं ।
अभि । अमित्रिणे । नः । मा । अकुत्र । नः । गृहेभ्यः । धेनवः । गुः । स्तनऽभुजः ।
अशिश्वीः ॥ ८ ॥ दुहीयन् । मित्रऽधितये । युवाकु । राये । च । नः । मिमीतं ।
वाजऽवत्यै । इषे । च । नः । मिमीतं । धेनुऽमत्यै ॥ ९ ॥

अश्विनोरसनं रथमनश्वं वाजिनीवतोः ।
तेनाहं भूरि चाकन ॥ १० ॥
अयं समह मा तनूह्याते जनाँ अनु ।
सोमपेयं सुखो रथः ॥ ११ ॥
अध स्वप्नस्य निर्विदेऽभुञ्जतश्च रेवतः ।
उभा ता बस्त्रि नश्यतः ॥ १२ ॥ २३ ॥ १७ ॥

## ॥ अष्टादशोऽनुवाकः ॥

॥ १२१ ॥ ऋषि कक्षीवान् । देवता-विश्वेदेव,-इन्द्र । छन्द-त्रिष्टुप् ॥

॥१२१॥ कदित्था नॄँः पात्रं देवयतां श्रवद्गिरो अङ्गिरसां तुरण्यन् ।
प्र यदानड्विश आ हर्म्यस्योरु क्रंसते अध्वरे यजत्रः ॥ १ ॥
स्तम्भीद्ध द्यां स धरुणं प्रुषायदृभुर्वाजाय द्रविणं नरो गोः ।
अनु स्वजां महिषश्चक्षत व्रां मेनामश्वस्य परि मातरं गोः ॥ २ ॥

---

अश्विनोः । असनं । रथं । अनश्वं । वाजिनीऽवतोः । तेन । अहं । भूरि । चाकन ॥ १० ॥ अयं । समह । मा । तनु । ऊह्याते । जनान् । अनु । सोमऽपेयं । सुऽखः । रथः ॥ ११ ॥ अध । स्वप्नस्य । निः । विदे । अभुंजतः । च रेवतः । उभा । ता । बस्त्रि । नश्यतः ॥ १२ ॥ २३ ॥ १७ ॥

कत् । इत्था । नॄन् । पात्रं । देवऽयतां । श्रवत् । गिरः । अंगिरसां । तुरण्यन् । प्र । यत् । आनट् । विशः । आ । हर्म्यस्य । उरु । क्रंसते । अध्वरे । यजत्रः ॥ १ ॥ स्तंभीत् । ह । द्यां । सः । धरुणं । प्रुषायत् । ऋभुः । वाजाय । द्रविणं । नरः । गोः । अनु । स्वऽजां । महिषः । चक्षत । व्रां । मेनां । अश्वस्य । परि । मातरं । गोः ॥ २ ॥

नक्षद्धवमरुणीः पूर्व्यं राट् तुरो विशामङ्गिरसामनु द्यून् ।
तक्षद्वज्रं नियुतं तस्तम्भद्द्यां चतुष्पदे नर्याय द्विपादे ॥ ३
अस्य मदे स्वर्यं दा ऋतायापीवृतमुस्रियाणामनीकम् ।
यद्ध प्रसर्गे त्रिककुन्निवर्तदप द्रुहो मानुषस्य दुरो वः ॥ ४ ॥
तुभ्यं पयो यत्पितरावनीतां राधः सुरेतस्तुरणे भुरण्यू ।
शुचि यत्ते रेक्ण आयजन्त सबर्दुघायाः पय उस्रियायाः ॥ ५ ॥ २४ ॥
अध प्र जज्ञे तरणिर्ममत्तु प्र रोच्यस्या उषसो न सूरः ।
इन्दुर्येभिराष्ट स्वेदुहव्यैः स्रुवेण सिञ्चञ्जरणाभि धाम ॥ ६ ॥
स्विध्मा यद्वनधितिरपस्यात्सूरो अध्वरे परि रोधना गोः ।
यद्ध प्रभासि कृत्व्याँ अनु द्यूननर्विशे पश्विषे तुराय ॥ ७ ॥

---

नक्षत् । हवं । अरुणीः । पूर्व्यं । राट् । तुरः । विशां । अंगिरसां । अनु । द्यून् ।
तक्षत् । वज्रं । निऽयुतं । तस्तंभत् । द्यां । चतुःऽपदे । नर्याय । द्विऽपादे ॥ ३ ॥
अस्य । मदे । स्वर्यं । दाः । ऋताय । अपिऽवृतं । उस्रियाणां । अनीकं । यत् । ह ।
प्रऽसर्गे । त्रिऽककुप् । निऽवर्तत् । अप । द्रुहः । मानुषस्य । दुरः । वरिति वः ॥ ४ ॥
तुभ्यं । पयः । यत् । पितरौ । अनीतां । राधः । सुऽरेतः । तुरणे । भुरण्यू इति ।
शुचि । यत् । ते । रेक्णः । आ । अयजंत । सबःऽदुघायाः । पयः । उस्रि-
यायाः ॥ ५ ॥ २४ ॥ अध । प्र । जज्ञे । तरणिः । ममत्तु । प्र । रोचि । अस्याः ।
उषसः । न । सूरः । इंदुः । येभिः । आष्ट । स्वऽइदुहव्यैः । स्रुवेण । सिंचन् ।
जरणा । अभि । धाम ॥ ६ ॥ सुऽइध्मा । यत् । वनऽधितिः । अपस्यात् । सूरः ।
अध्वरे । परि । रोधना । गोः । यत् । ह । प्रऽभासि । कृत्व्यान् । अनु । द्यून् । अन-
र्विशे । पश्वऽइषे । तुराय ॥ ७ ॥

अष्टा महो दिव आदो हरी इह द्युम्नासाहमभि योधान उत्सं ।
हरिं यत्ते मन्दिनं दुक्षन्वृधे गोरभसमद्रिभिर्वाताप्यम् ॥ ८ ॥
त्वमायसं प्रति वर्तयो गोर्दिवो अश्मानमुपनीतमृभ्वा ।
कुत्साय यत्र पुरुहूत वन्वञ्छुष्णमनन्तैः परियासि वधैः ॥ ९ ॥
पुरा यत्सूरस्तमसो अपीतेस्तमद्रिवः फलिगं हेतिमस्य ।
शुष्णस्य चित्परिहितं यदोजो दिवस्परि सुग्रथितं तदादः ॥ १० ॥ २५ ॥
अनु त्वा मही पाजसी अचक्रे द्यावाक्षामा मदतामिन्द्र कर्मन् ।
त्वं वृत्रमाशयानं सिरासु महो वज्रेण सिष्वपो वराहुम् ॥ ११ ॥
त्वमिन्द्र नर्यो याँ अवो नॄन्तिष्ठा वातस्य सुयुजो वहिष्ठान् ।
यं ते काव्य उशना मन्दिनं दाद्वृत्रहणं पार्यं ततक्ष वज्रम् ॥ १२ ॥

---

अष्टा । महः । दिवः । आदः । हरी इति । इह । द्युम्नऽसहं । अभि । योधानः । उत्सं । हरिं । यत् । ते । मंदिनं । धुक्षन् । वृधे । गोऽरभसं । अद्रिऽभिः । वाताप्यं ॥ ८ ॥ त्वं । आयसं । प्रति । वर्तयः । गोः । दिवः । अश्मानं । उपऽनीतं । ऋभ्वा । कुत्साय । यत्र । पुरुऽहूत । वन्वन् । शुष्णं । अनंतैः । परिऽयासि । वधैः ॥ ९ ॥ पुरा । यत् । सूरः । तमसः । अपिऽइतेः । तं । अद्रिऽवः । फलिऽगं । हेतिं । अस्य । शुष्णस्य । चित् । परिऽहितं । यत् । ओजः । दिवः । परि । सुऽग्रथितं । तत् । आ । अदरित्यदः ॥ १० ॥ २५ ॥ अनु । त्वा । मही इति । पाजसी इति । अचक्रेऽइति । द्यावाक्षामा । मदता । इंद्र । कर्मन् । त्वं । वृत्रं । आऽशयानं । सिरासु । महः । वज्रेण । सिस्वपः । वराहुं ॥ ११ ॥ त्वं । इंद्र । नर्यः । यान् । अवः । नॄन् । तिष्ठ । वातस्य । सुऽयुजः । वहिष्ठान् । यं । ते । काव्यः । उशना । मंदिनं । दात् । वृत्रऽहनं । पार्यं । ततक्ष । वज्रं ॥ १२ ॥

त्वं सूरो॑ हरितो॑ रामयो नॄन्भर॑च्चक्रमेत॑शो नायमिन्द्र ।
प्रास्य॑ पारं न॑वतिं नाव्या॑नामपि॑ कर्तम॑वर्तयोऽय॑ज्यून् ॥ १३ ॥
त्वं नो॑ अस्या इ॑न्द्र दुर्हणा॑याः पाहि व॑ज्रिवो दुरितादभीके॑ ।
प्र नो वाजा॑न्र॒थ्यो॑३ अश्व॑बुध्यानिषे य॑न्धि श्रव॑से सूनृता॑यै ॥ १४ ॥
मा सा ते॑ अस्मत्सु॑मतिर्वि द॑सद्वाज॑प्रमहः समिषो॑ वरन्त ।
आ नो॑ भज मघवन्गोष्व॒र्यो मं॑हिष्ठास्ते सधमादः स्याम ॥१५॥२६॥८॥१॥

---

त्वं । सूरः॑ । हरितः॑ । रमयः । नॄन् । भर॑त् । चक्रं । एत॑शः । न । अयं । इंद्र ।
प्रऽअस्य॑ । पारं । नवतिं । नाव्या॑नां । अपि॑ । कर्तं । अवर्तयः । अय॑ज्यून् ॥ १३ ॥
त्वं । नः । अस्याः । इंद्र । दुःऽहनायाः । पाहि । वज्रिऽवः । दुःऽइतात् । अभीके॑ । प्र ।
नः । वाजा॑न् । रथ्यः॑ । अश्व॑ऽबुध्यान् । इषे । यंधि । श्रव॑से । सूनृता॑यै ॥ १४ ॥
मा । सा । ते । अस्मत् । सुऽमतिः । वि । दसत् । वाज॑ऽप्रमहः । सं । इषः॑ । वरंत ।
आ । नः । भज । मघऽवन् । गोषुं । अर्यः । मंहिष्ठाः । ते । सधऽमादः॑ । स्याम ।
॥ १५ ॥ २६ ॥ ८ ॥ १ ॥

इति प्रथमाष्टके अष्टमोऽध्यायः ॥ ८ ॥

॥ प्रथमाष्टकः समाप्तः ॥ १ ॥

श्रुतिबोध--ग्रंथ--मालिका

# ऋग्वेद

## पहिलें अष्टक-मराठी भाषांतर

संपादक.

रामचंद्र विनायक पटवर्धन, बी. ए एल् एल. बी.
अच्युत बळवंत कोल्हटकर, बी. ए एल एल बी.
दत्तो अप्पाजी तुळजापुरकर, बी ए एल एल बी.

श्रुतिबोध कार्यालय,
४७, काळबादेवी, मुंबई.

श्रुतिबोध-मुद्रा-मंदिर

किमत २॥ रुपये.

पाहिलें अष्टक । पाहिलें मण्डल ।

# ॥ ऋग्वेद ॥

[ पाहिला अध्याय ] [ पाहिला अनुवाक ]

॥ १ ॥ १--९ मधुच्छन्दा ऋषि ॥ अग्नि देवता ॥

अग्नि हा यज्ञाचा अग्रणी आहे. यज्ञाचा प्रमुख देव तोच. यज्ञाचे हविर्भाग त्या त्या देवतांप्रत पोहोंचविणारा सन्माननीय आचार्यहि पण तोच. असंख्य रत्नांचा अनुपम निधि ह्याचे जवळ आहे. तेव्हां अशा अग्निदेवाचें मी स्तवन करितों. १

पूर्वकालीन ऋषींना या अग्नीची स्तुति करण्यांत प्रेम वाटलें, व अर्वाचीन ऋषींनाही तो स्तवनाला सर्वथैव योग्य वाटतो. आमच्या यज्ञांत हाच अखिल देवांना घेऊन येतो. २

या अग्नीमुळेंच भक्ताला वैभव प्राप्त होतें आणि तें वैभवहि असें कीं जें दिवसानुदिवस वृद्धिंगत होत जातें. वीरश्रेष्ठ पुरुषांनांच जी जयश्री माळ घालणार तीहि या अग्नीच्या कृपेनें पूजकास प्राप्त होते. ३

हे अग्निदेवा, ज्या पवित्र यज्ञावर चोहोंकडून तुझी दृष्टी असते, तोच यज्ञ देवांना ग्रहण करण्यास योग्य वाटतो. ४

अग्निद्वारेंच सर्व देवांना त्यांचे हविर्भाग प्राप्त होतात. बुद्धिशाली पंडितांना ह्याचे-पासून ज्ञानसामर्थ्य प्राप्त होतें. ह्यानें दिलेले वर निःसंशय सफल व्हावयाचेच व कोणी भक्त कितीहि ठिकाणीं यास पाचारण करोत त्यांची प्रार्थना ह्याचे कानावर गेली नाहीं असें कधीं व्हावयाचेंच नाहीं. असा अग्नि देवसमुदायासह येथें प्राप्त झालेला आहे. ५ ( १ )

हे अग्निदेवा, हे अंगिरसा, उपसकांना जें कांहीं मंगल आशीर्वचन तूं देशील तें सत्य झालेंच पाहिजे याबद्दल शंका नाहीं. ६

हे अग्ने, प्रत्यहीं, रात्रीं व दिवसां, अन्तःकरणपूर्वक तुला वंदन करीत आम्ही तुझ्या चरणाचा आश्रय करितों, ७

कारण प्रत्येक पुण्ययज्ञांत तूंच विराजमान होतोस, सर्व विधींचा रक्षणकर्ता तूंच आहेस, तुझें तेज अत्यंत देदीप्यमान आहे, यज्ञांत स्थित असतांना तुझ्या आनंदाला भरती येते. ८

हे अग्निदेवा, आह्मी तुझीं लेंकरें आहोंत. मायाळू पित्याप्रमाणें आमचे लाड तूं उत्तम तऱ्हेनें पुरव. आमच्यापासून दूर जाऊं नको त्यांतच आमचें क्षेम आहे. ९ ( २ )

## सूक्त २.

मधुच्छन्दा ऋषि ॥ देवता, १-३ वायु ४-६ इंद्रवायु ७--९ मित्रावरुण ॥

जनांस आल्हाद देणाऱ्या हे वायुदेवा, तुझें आगमन होऊं दे. तुझ्याकरितां या सोमरसांची उत्तम सिद्धता करून ठेविली आहे. त्यांचे सेवन कर. आमची प्रार्थना ऐक. १

हे वायुदेवा, यागकालाचे उत्तम ज्ञान असलेले विद्वान् स्तोत्रप्रबंधकर्ते, सोमरस सिद्ध करून, सुदर सुंदर स्तोत्रांनीं तुझी महती गात आहेत. २

हे वायुदेवा, तुझा शब्द विश्वसंचारी आहे. त्याचें श्रवण ह्मणजे सर्व कामना परिपूर्ण होण्याची तयारीच होय. तुला सोमपानाची इच्छा झाली ह्मणजे तुझी मनीषा व्यक्त करण्याकरितां, हा तुझा शब्द तुझ्या भक्तांकडे गमन करितो. ३

अहो इंद्रवायु, हे येथें सोमरस सिद्ध करून ठेविले आहेत. आपण आह्मांवर प्रसाद करण्याकरितां या. या सोमरसाची अशीच इच्छा आहे कीं आपण त्याचें सेवन करावें ४

हे वायुदेवा, वेगसामर्थ्य हे तुझें आणि इंद्राचे वैभव आहे. तर त्वरा करून तुह्मी दोघेहि या. कारण सोमरसाची रुचि काय आहे हें तुह्मास माहितच आहे. ५ ( ३ )

हे वायुदेवा, तुझें व इंद्राचे बल अनुपम आहे, तुह्मी दोघेही सोमपानाची आवड धरून मीं भक्तीनें केलेला हा सुंदर सोमरस प्राशन करण्याकरितां सत्वर या. ६

पवित्र कार्यास ज्याचे सामर्थ्याचा आधार आहे, अशा **मित्रास** मी निमंत्रण करितों. दुष्टांचा निःपात करणारा जो वरुण त्यासही मीं भक्तीनें बोलावतों. या दोघांच्या इच्छेनें पृथ्वीवर पर्जन्यवृष्टि होत असते. ७

**मित्रावरुणामुळेंच** विश्वांतील नियमनांचा मान राहतो आणि ते स्वतःहि धर्मनियमांचें परिपालन करण्यांत भूषण मानतात, व आपलें सामर्थ्यहि धर्मनीतीनें विभूषित करीत असतात. ८

सर्वोपकारी व सर्वव्यापी अशा आमच्या मित्रावरुणांची बुद्धिसंपन्नता अपूर्व आहे, व त्यांचें बल कृतिरूपाने व्यक्त होणारे आहे. ९( ४ )

## सूक्त ३.

मधुच्छन्दा ऋषि ॥ देवता, १-३ अश्वी, ४--६ इंद्र, ७--९ विश्वेदेव, १०--१२ सरस्वती.

अहो अश्विनहो, दानकर्मानें आपले हस्त आर्द्र झालेले आहेत. जगतांत जे शुभ ह्मणून आहे, त्याचे स्वामी आपणच आहांत. असंख्य भक्तांना आपलाच आधार आहे. आमचे हवि आपण गोड करून घ्या. १

अश्विनहो, आपलीं अनेक अद्भुत कृत्यें आह्मांस माहित आहेत. आपलें शौर्यहि सर्वप्रसिद्ध आहे, व आपलें धैर्य अप्रतिम आहे. आमच्या स्तुतीचा आपण कनवाळूपणानें स्वीकार करा. २

हे सत्यस्वरूप अश्विनदेवतांनो, क्लेशपरिहारक ह्मणून आपली ख्याति आहे. आपण भीषण पराक्रम करणारे आहांत. आपले आगमन इकडे होऊं द्या. कारण हे पहा, आह्मीं सोमरसांत पडलेलीं दर्भाची अग्रें काढून टाकून व त्यात स्वादिष्ट पदार्थ मिश्र करून तो तयार करून ठेविला आहे. ३

हे इंद्रा, तुझी कांति अलौकिक आहे. इकडे ये. हे सोमरस तुझ्याकरितां आह्मी आपल्या करांगुलींनीं पिळून ठेविले आहेत. हे नेहमीच शुद्ध आहेत. ४

हे इंद्रा, मोठमोठ्या विद्वानांनीं तुझें स्तवन केलेलें आहे, व मीहि तुला भक्तीनें आळविलें आहें. तर माझ्या प्रार्थनेचा स्वीकार करण्याकरितां तूं आपण होऊन इकडे ये. हा सोमरस मी सिद्ध करून ठेविला आहें. ५

पीतवर्ण अश्वावर आरूढ होणाऱ्या हे इंद्रदेवा, आमच्या स्तवनांचा अंगिकार करण्याकरितां तूं त्वरेनें इकडे ये. आणि आमच्या या सोमरसाविषयीं आपले मनांत आवड ठेव. ६ ( ५ )

हे विश्वेदेवहो, आपण जगताचें रक्षणकर्ते आणि अखिल प्राणिमात्रांचें पोषण करणारे आहांत. आपणांस मी हविर्भाग अर्पण करीत आहें. तर आपण इकडे या. आपली औदार्य-बुद्धि सर्वप्रसिद्ध आहे. ७

हे विश्वेदेवहो, जगताचें रक्षण आपण करीत असतां. जितक्या उत्सुकतेनें धेनु सायं-काळीं घराकडे धांवत सुटतात तितक्या उत्सुकतेनें आमचे सोम ग्रहण करण्याकरितां तुह्मी इकडे या. ८

सर्वांची चिंता वाहणाऱ्या विश्वेदेवांनी आमच्या हवींचा स्वीकार केलेला आहे. त्यांची माया अतर्क्य आहे. ते कोणाचा द्रोह करीत नाहींत, व त्यांचेंहि अहित करण्यास कोणी समर्थ नाहींत. ९

जगतास पावन करणारी सरस्वती, आमच्या यज्ञांतील हविर्भागांची प्रेमानें इच्छा करो. हिचें बुद्धिसामर्थ्य अपार आहे. १०

सत्य भाषणाला माधुर्य आणणारी हीच, आणि उत्तम विचारांची ओळख करून देणारीही पण हीच. ही सरस्वती आमच्या यज्ञाचा स्वीकार करीत आहे. ११

स्वप्रकाशानें ज्ञानाच्या महासागराची ती आह्मांस स्पष्ट कल्पना करून देते. या विश्वांत बुद्धि ह्मणून जेथें जेथें आढळते तेथें तेथें साम्राज्य करणारी अधिदेवता हीच होय. १२(६)

## अनुवाक २.

### सूक्त ४.

मधुच्छन्दा ऋषि ॥ देवता, इंद्र ॥

उत्तम प्रकारचें अन्न अर्पण केलें असतां ज्याप्रमाणें गाय सुप्रसन्न होऊन भरपूर पान्हा देते, त्याप्रमाणें तूं प्रसन्न व्हावेंस ह्मणून, आह्मी तुला प्रत्यहीं हवि अर्पण करितों. हें सुंदर विश्व तूंच उत्पन्न केलें आहेस. १

हे आमचे सोमाचे हवि ग्रहण करण्याकरितां इकडे ये, तुला सोमाची अत्यंत आवड आहे. तेव्हां आमचा हा सोमरस प्राशन कर. तुझें वैभव अपार आहे. तूं प्रसन्न झालास ह्मणजे गोधनादि ऐश्वर्य सहजच प्राप्त होतें. २

तुझें अंतःकरण दयाशील तर खरेंच, पण त्या अंतःकरणाच्याही अंतर्भागाची आह्मांस ओळख होऊं दे. आमचा अव्हेर करूं नकोस. तुझें आगमन इकडे होऊं दे. ३

बुद्धिशाली, अजिंक्य, आणि प्रज्ञावान् असा जो इंद्र—कीं तुझ्या अत्यंत जिवलग मित्रांपेक्षांही जो सर्वतोपरी अधिक आहे—त्याच्याजवळ जाऊन जें मागणें असेल तें माग; जा. ४

इंद्राचीच जर तुह्मीं उपासना केली तर कल्याणाच्या इतर मार्गांस मुकाल असें आह्मांस निंदकलोक खुशाल ह्मणोत; ५ (७)

अथवा ह्याच कारणामुळें, " आह्मी मोठे भाग्यवान्, असेंही तुझ्या भक्तांनीं आह्मांविषयीं उद्गार काढिलेले असोत, परंतु आमचा एकच निश्चय कीं हें अघटित कृत्य करणाऱ्या इंद्रा, आह्मी तुझ्या सौख्यमय आश्रयाखालींच राहणार. ६

सर्वव्यापी इंद्रास सोमरस अर्पण करा. हें सोमरसपान सर्व गात्रांच्या ठिकाणीं नवा जोम उत्पन्न करणारे आहे. सोमरसामुळेंच यज्ञाला शोभा आहे. शूरांचा खरा संतोष यांतच आहे. यामुळेंच शरीरात चैतन्य उत्पन्न होतें, आणि आमच्या परमप्रिय इंद्रास आनंदाचें स्फुरण हाच चढवितो. ७

याच सोमरसांचें पान करून, हे महापराक्रमी इंद्रा, तूं शत्रूचा उच्छेदक झालास, आणि शूरत्वाच्या कृत्यांत तूं शूरांचें रक्षण केलेंस. ८

हे महापराक्रमी इंद्रा, शौर्याच्या कृत्यांत तू आपला पराक्रम गाजवतोस. वैभवप्राप्तीच्या इच्छेनें आह्मी तुझ्या यशाचे वर्णन करीत आहोत. ९

जो संपत्तीचा स्वामी आहे, ज्याचें महत्व अपार आहे, जो सर्वांस सुलभरीतीनें संकटांतून पार नेतो आणि सोमरस अर्पण करणाऱ्या याजकाचा जो परम सखा आहे त्या इंद्राचें यशोगायन करा. १० (८)

# सूक्त ५

मधुच्छन्दा ऋषि ॥ इंद्र देवता.

अहो स्तोत्रें गाण्यांत कुशल असणाऱ्या मित्रांनो, या, बसा, आणि इंद्राला उद्देशून गायन करा. १

सोमरस पिळून तयार केल्यानंतर तुह्मी इंद्रास पाचारण करा. हा इंद्र श्रेष्ठांचा शिरोमणी व स्पृहणीय संपत्तीचा स्वामी आहे. २

हा आह्मांस वैभव प्राप्त करून देवो. आमच्या उत्कृष्ट लाभांचे आणि सद्भावनांचे ठिकाणीं हाच वास करो. हा आपल्या सर्व सामर्थ्यासह आमचेकडे येवो. ३

ज्याचे अश्व सज्ज होऊन उभे राहिले असतां त्यांचेपुढेंसुद्धां शत्रूंना युद्धांत तोंड देववत नाहीं, त्या इंद्राचा महिमा तुह्मी गा. ४

तुर्तेंच पिळून ठेविलेले, पवित्र व दहीं मिश्रित केलेले हे सोमरस इंद्रानें आपली रुचि घ्यावी या इच्छेनें सोमप्रिय इंद्राकडे निघाले आहेत. ५ (९)

पराक्रमानें शोभणाऱ्या इंद्रा, जगतावर वर्चस्व चालवावें ह्या इच्छेनें तूं सोमपान करण्यासाठीं एकदम प्रगल्भ रूपानेंच प्रकट झालास. ६

स्तुतीनें उल्हास पावणाऱ्या हे इंद्रा, सर्व गात्रांस प्रमोद देणारे सोमरस तुझ्या मुखांत प्रवेश करोत आणि तुला आनंद देवोत. तूं ज्ञानमंडित आहेस. ७

हे प्रज्ञानशाली इंद्रा, स्तुतींनीं तुझें महत्व वृद्धिंगत झालें. स्तवनांनीं तुझा महिमा सर्वत्र विदित झाला. आमचीं स्तोत्रेंही तुझी महती वाढवोत. ८

इंद्रानें रक्षण करण्याचें मनांत आणिलें ह्मणजे त्यास खंड पडणें अशक्य आहे. ह्यासाठीं तो आह्मांस असें एकच सामर्थ्य देवो कीं ज्याची बरोबरी दुसऱ्या हजारों सामर्थ्यांनाही न येतां त्यायोगें यच्चावत् पराक्रमांचीं कृत्यें सहज होऊं शकतील. ९

हे सर्वस्तुत इंद्रा, कोणीही मर्त्यजन आमच्या देहांस उपद्रव देण्यास समर्थ न होवो. तुझी सत्ता सर्वत्र असल्यामुळें आमचा कोणाकडूनही अकस्मात् रीतीनें वध न होईल असें कर. १० (१०)

## सूक्त ६.

मधुच्छन्दा ऋषि ॥ देवता, १—३ इंद्र, ४, ६, ८, ९ मरुत्, ५, ७ मरुत् आणि इंद्र, १० इंद्र ॥

हे तेजोगोल आकाशामध्यें चमकत आहेत आणि अनुचरांप्रमाणें ते ह्या मध्यवर्ती देवतेची निघण्याची तयारी करीत आहेत. हें मध्यवर्ती तेज सामर्थ्यवान्, उज्वल आणि सर्वसंचारी आहे. १

ते परिचारक त्याच्या रथाच्या दोहों बाजूंस अश्व जोडीत आहेत. हे अश्व इतके सुंदर आहेत कीं कोणाच्याही मनांमध्यें त्यांचेविषयीं अभिलाष उत्पन्न होईल. त्यांचा वर्ण किंचित् तांबूस असून ह्या पराक्रमी देवास वाहून नेत असतांना त्यांच्या अंगांतील तेजस्वीपणा दृग्गोचर होतो. २

अहाहा ! अचेतनास चैतन्य देऊन आणि जें आकारहीन होतें त्याला साकार करून तूं उषेसहवर्तमान जन्म घेतलास. ३

यज्ञकर्मांत परिचित असलेलें नांव धारण करून ते सृष्ट्यनुक्रमानें पुनः गर्भवास पावले. ४

हे इंद्रा, दुर्भेद्य पर्वत भेदणाऱ्या अशनीच्या योगानें गुहा फोडून टाकून प्रभारूपी अशा धेनूंचा तू तपास लावलास. ५ ( ११ )

अभीष्ट वैभव देणाऱ्या या इंद्रास उद्देशून भक्तांनीं स्तोत्रें केलीं. त्याचें महत्व व यश हीं दोन्ही विश्रुत आहेत. ६

ज्याचे हृदयास भीतीनें कधींहि स्पर्श केला नाहीं अशा इंद्राबरोबर तूं संचार करितांना दिसतोस, त्या वेळीं दोघांचेंहि तेज समान दिसतें व तुह्मी दोघेही आनंदित दिसतां. ७

इंद्राचे अनुचर सर्वांना प्रिय आणि अतिशय तेजस्वी असून त्यांचे ठिकाणीं कोणत्याहि प्रकारचा अवगुण मुद्दाम पाहूं गेल्यासही सांपडणार नाहीं. त्यांनीं विभूषित असलेल्या ह्या देवा-प्रीत्यर्थ आमच्या यज्ञांत उच्च घोषानें अर्चन चाललेलें आहे. ८

यासाठीं हे सर्वव्यापी देवा, द्युलोकामधून अथवा प्रकाशमान् अंतरिक्षांतून तू इकडे ये. या यज्ञांत हा मी तुझा दास तुझीं स्तोत्रें गात गात आपली वाणी अलंकृत करीत आहें. ९

आह्मांस इंद्रदर्शन हेंच अभीष्ट आहे. तें दिव्यलोकांतून अथवा भूलोकांतून किंवा महान् अंतरिक्षांतून, कोठूनतरी आह्मांस प्राप्त होवो. १० ( १२ )

## सूक्त. ७

मधुच्छन्दा ऋषि ॥ देवता-इंद्र

गाथा गाणाऱ्या ऋषींनीं अनेक गाथांनीं इंद्राचीच स्तुति केली. अर्कपाठक विद्वानांनींहि इंद्राचें अर्चन केलें. अशा रीतीनें अनेक स्तोत्रांच्याद्वारें इंद्राचें स्तवन झालेलें आहे. १

पीतवर्ण अश्वांचा स्वामी फक्त इंद्रच आहे. हाच सर्वांस आज्ञा करितो. हा वज्रधारी इंद्र सर्व अविनाशी संपत्तीचा प्रभु आहे. २

सर्वांना पूर्णपणें दृष्टीस पडेल अशा रीतीनें इंद्रानें सूर्याची आकाशांत स्थापना केली. आपल्या अशनीच्या योगानें पर्वतप्राय मेघांस त्यानें हलवून सोडलें. ३

हे इंद्रा, तूं उग्रस्वरूप आहेस, तेव्हां आपल्या उग्र साधनांनीं जेथें साहसाचीं कृत्यें चाललीं आहेस आणि हजारों वीर जेथें झुंजत आहेत अशा ठिकाणीं आमचें सरक्षण कर. ४

शत्रु प्राप्त झाले असतां आह्मी इंद्रास हांक मारितों. मोठमोठ्या युद्धांत व लहानलहान लढायांतहि आह्मी इंद्राचा धांवा करितों. कारण तोच वज्रधारी व आमचा खरा साह्यकर्ता आहे. ५ ( १३ )

वृष्टीच्या योगानें सदोदित औदार्य प्रकट करणाऱ्या हे इंद्रदेवा, तूं यत्किंचित् सुद्धां अनमान न करितां मेघपटल दूर कर. ६

इंद्राचे पराक्रम वर्णन करणाऱ्या ज्या उत्तम उत्तम प्रार्थना आहेत त्यांतसुद्धां हे इंद्रा, तुझ्या योग्यतेस साजेल अशी स्तुति मला सांपडत नाहीं. ७

ज्याची गति डौलदार आहे, असा एखादा महावृषभ ज्याप्रमाणें वृषभसमुदायास मार्गदर्शक होतो, त्याप्रमाणें हा जगताचा स्वामी इंद्र सर्व मानवांचा संतोष ठेवून त्यांस आपल्या सामर्थ्यानें पुढें जावयास प्रवृत्त करितो. ८

सर्व जगत, सर्व संपत्ति आणि पांचहि लोक ह्यांवर इंद्राचें एकट्याचेंच स्वामित्व आहे.९

जनतेच्या हिताकरितां आह्मी प्रत्येक ठिकाणाहून तुमचा जो प्रिय इंद्र त्यास पाचारण करितों. तो इंद्र केवळ आमचाच पक्षपाती असो. १० ( १४ )

# अनुवाक ३.

## सूक्त ८.

मधुच्छन्दा, ऋषि ॥ देवता–इंद्र ॥

हे इंद्रा, आमच्या संरक्षणाकरितां आह्मांस असें वैभव दे कीं ज्यायोगानें मनास समाधान वाटेल, ज्याच्यायोगानें आह्मांस वर्चस्व प्राप्त होईल, ज्याचा कधींही नाश होणार नाहीं, व जें सर्व लोकांत उत्कृष्ट ठरेल. १

तें वैभव असें असावें कीं, तूं अश्वारूढ होऊन आमचें संरक्षण करूं लागलास कीं नुसत्या मुष्टिप्रहारानें आह्मांस पातकी शत्रूंचा नाश करितां यावा. २

तूं रक्षण करीत असतां आह्मीं हातांत घण घेतला तरी त्याचें वज्र बनेल, आणि आह्मांस समरांगणामध्यें शत्रूंस जिंकतां येईल. ३

तुझें साह्य असल्यावर शत्रु कितीही संग्रामनिपुण असले तथापि शूर असवेत्यांच्या मद-तीनें आह्मी त्यांना जेरीस आणूं. ४

हा वज्रधारी इंद्र श्रेष्ठ आहे. किंबहुना त्याहूनही अधिक आहे. याचें महत्त्व असेंच चि-रकालिक असो. त्याचे बल आकाशासारखें अनंत आहे. ५ ( १५ )

शूर पुरुष रणांगणांत जें यश मिळवतात, अपत्यलाभानें मनुष्यांस जें सुख प्राप्त होतें, अथवा एकाग्रबुद्धीनें स्तवन करणारे विद्वान् लोक जें कांहीं संपादन करितात, ६

किंवा सोमरसाचें प्रेमानें पान करून भक्तांचें जें उदर सागराप्रमाणें तुडुंब भरलेलें दिसतें, अथवा ज्या कंठामधून एखाद्या विशाल नदीप्रमाणें सोमरसाचा प्रवाह चाललेला असतो, ७

हा सर्व त्या इंद्राच्या आशीर्वचनांचाच प्रभाव होय. तीं तुझीं उत्तम आशीर्वचनें पक्वफलयुक्त अशा वृक्षशाखेप्रमाणें तुझ्या दासास फलद्रूप होतात व त्यास गोधनादि संपत्ति व इतर अनेक सुखें प्राप्त करून देतात. ८

हे इंद्रा, तीं तुझीं सामर्थ्यें व भक्तांचे रक्षण करण्याचे मार्ग माझ्यासारख्या दासाला नेहमींच अनुकूल आहेत. ९

अशीं हीं इंद्राचीं स्पृहणीय व प्रशंसनीय स्तुतिस्तोत्रें सोमपानाला इंद्रास प्रवृत्त करोत. १० ( १६ )

## सूक्त ९.

मधुच्छन्दा, ऋषि ॥ देवता--इंद्र ॥

हे इंद्रा ये, आणि जेव्हां जेव्हां आमचे हातून सोमयाग होतील तेव्हां तेव्हां आमचे हवि गोड मानून घे. आपल्या सामर्थ्यानें तूंच आमचा संरक्षणकर्ता झाला आहेस. १

या आनंदी इंद्राला हा आनंददायक सोमरस तयार होतांच अर्पण करा; ह्या विश्वकर्त्याला हा आनंदकारक सोमरस द्या. २

हे दिव्यमुकुट धारण करणाऱ्या इंद्रा, हे सर्वद्रष्ट्या देवा, या प्रमोददायक स्तवनांनीं तूं आनंदित हो, आणि आह्मी हवि अर्पण करीत असतांना तेथें तुझें वास्तव्य असूं दे. ३

हे इंद्रा, तुला उद्देशून मीं स्तवनोक्तींचा उच्चार केला, परंतु तत्पूर्वींच त्या अधीर मनानें तुजकडे चालत्या झाल्या. तूं त्यांचा नाथ व त्यांच्या कामना परिपूर्ण करणारा स्वामी आहेस. ४

हे इंद्रा, अप्रतिम आणि स्पृहणीय असें धन आह्मांला पाठवून दे; खरोखर तुझ्याजवळ अत्यंत उत्कृष्ट आणि विपुल धन आहे. ५ ( १७ )

हे सहस्रकांति इंद्रा, आम्हांस वैभव प्राप्त व्हावें म्हणून धनार्जनाकरितां आम्हांस प्रवृत्त कर; त्याबद्दल आम्हांकडून मनःपूर्वक प्रयत्न होऊं दे, व त्यांत आम्हांस यश येईल असें कर. ६

हे इंद्रा, गोधनादि वैभव आमचेजवळ पुष्कळ आहे, आमचें सामर्थ्य मोठें आहे व आम्ही दीर्घायुषी आहोंत अशी आमची कीर्ति सर्वत्र प्रसार पावो, व तीस कधींहि खंड न पडो. ७

हे इंद्रा, आमची कीर्ति पुष्कळ वाढीव. आम्हांस अपार वैभव दे आणि आम्हांस रथ प्राप्त होतील अशी कृपा आम्हांवर कर. ८

अनेक प्रकारच्या स्तुतींनीं आळवून आपण आपल्या संरक्षणार्थ इंद्रास पाचारण करूं या. हा वैभवाचा राजा आहे. हा छंदोबद्ध कवितांनीं वर्णन करण्यासारखा आहे. त्यास हांक मारण्याचा अवकाश, कीं तो कोठेंही उभा आहे. ९

प्रत्येक सोमयागाच्या ठिकाणीं वास्तव्य करणाऱ्या या श्रेष्ठ इंद्राप्रीत्यर्थ, हा त्याचा भक्त, उच्चस्वरानें व मनाची तृप्ति होईपर्यंत, स्तोत्रें अर्पण करीत आहे. १० ( १८ )

## सूक्त १०.

मधुच्छन्दा, ऋषि ॥ देवता--इंद्र ॥

गायत्रीवृत्त म्हणणारे उपासक तुझें यश गातात आणि अर्कनामक स्तोत्रें रचणारे तुझी अर्कांनीं अर्चा करितात. हे बलशाली इंद्रा, ज्याप्रमाणें ध्वजाची यष्टि उंच उभी करावी त्याप्रमाणें विद्वान् लोकांनीं तुला अतिशय उच्चत्व दिलेलें आहे. १

जेव्हां इंद्राच्या भक्तानें एका पर्वतशिखरावरून दुसऱ्या पर्वतशिखरावर याप्रमाणें आरोहण करून इंद्राचें अगाध कर्तृत्व अवलोकन केलें, तेव्हां पर्जन्याधिपति इंद्रहि त्याचे मनांतील भाव समजला, आणि आपला सर्व लवाजमा घेऊन येण्यास तो सिद्ध झाला. २

हे इंद्रा, तुझे अश्व वृष्टि उत्पन्न करणारे आहेत, त्यांची आयाळ दीर्घ आहे आणि त्यांच्या पुष्ट देहामुळें त्यांच्या बंधनरज्जु तंग झालेल्या आहेत. सोमप्रिय देवा, त्यांस आपल्या रथास जोड आणि आमची प्रार्थना तुला ऐकूं येईल इतका आमच्या सन्निध ये. ३

हे संपत्तिरूप इंद्रा, इकडे ये, आमच्या प्रार्थनांची वाखाणणी कर, त्यांस चांगलें म्हण, त्यांच्याबद्दल प्रशंसापर उद्गार काढ, आमच्या प्रार्थनेचा स्वीकार कर, आणि आमचे यज्ञ कामप्रद होतील असें कर. ४

सर्वार्थपरिपूरक इंद्रास उद्देशून उत्कृष्ट असें स्तोत्र गाइलें पाहिजे. असें केलें असतां आमच्या पुत्रपौत्रांवर व आमच्या इष्टमित्रांवर इंद्र आपली कृपादृष्टि ठेवील. ५

त्याच्याच प्रेमाची वांच्छा धरून आह्मी त्याच्याजवळ जातों, संपत्तीसाठींही आह्मी त्यासच शरण जातों, आणि आह्मांस शौर्यप्राप्ति होण्याकरितां आह्मी त्याचाच आश्रय करितों. तेव्हां तोच इंद्र आह्मांस वैभव देऊन आमचे अगीं कर्तृत्वशक्ति उत्पन्न करो. ६ ( १९ )

हे इंद्रा, तुझ्या कृपेमुळें प्राप्त झालेली कीर्तिच सर्वत्र पसरते. तीस फार प्रयासही पडत नाहींत. हे वज्रधर देवा, धेनूंचा समुदाय बंधनांतून मुक्त कर आणि आह्मांवर प्रसाद कर. ७

तुला कोप आला असतां भूलोक व द्युलोक हे दोन्हीही तुला शांत करण्यास धजणार नाहींत. स्वर्गांतील उदकावर स्वामित्व स्थापन करून धेनूंना आमचेकडे पाठवून दे. ८

हे इंद्रा, तुझा कान चहूंकडे आहे. माझी प्रार्थना ऐक आणि माझ्या स्तुतींचा सत्वर स्वीकार कर. तूं माझा मित्र आहेस. तुझ्या अंतःकरणांत हें माझें स्तवन सांठवून ठेव. ९

कामना परिपूर्ण करणाऱ्या देवतांमध्यें तूं श्रेष्ठ आहेस हें आह्मांस माहीत आहे. तूंच प्रार्थना लवकर ऐकतोस हेंही आह्मीं जाणतों. पर्जन्यवृष्टीवर तुझा अधिकार चालत असल्या-

कारणानें तुझ्या कृपेची आम्ही याचना करितों, त्या कृपेची योग्यता इतरांपेक्षां सहस्रपटीनें अधिक आहे. १०

हे इंद्रा, हे कौशिका, सुप्रसन्न होऊन आमच्या सोमरसाचा सत्वर स्वीकार कर, आमच्या आयुर्मर्यादेंत नवीन भर घाल, आणि मला इतरांहून सहस्रपटीनें श्रेष्ठ असें ऋषित्व अर्पण कर. ११

हे सर्वस्तुत इंद्रा, हीं माझीं स्तोत्रें सर्वस्वी तुझेंच स्तवन करोत. हीं स्वीकार करण्यास योग्य आहेत. तुझ्या हातून त्यांचा योग्य आदर होवो व तुझ्या अनंत आयुष्याप्रमाणें हीं स्तोत्रेंही चिरकाल टिकोत. १२ ( २० )

## सूक्त ११

जेता माधुच्छंदस ऋषि । देवता, इंद्र ॥

समुद्रासही व्याप्त करून टाकणाऱ्या इंद्राचें यश विश्वांतील अखिल स्तुतिवचनांनीं वृद्धिंगत केले आहे. इंद्र हा सर्वांचा राजा आहे; सर्व सामर्थ्यांचा हा अधिपति आहे; सर्व महारथी वीरांतही हा अत्यंत श्रेष्ठ आहे. १

हे सामर्थ्याधिपति इंद्रा, तूं आमचा रक्षणकर्ता असतांना आह्मांस आपल्या सामर्थ्याबद्दल भरंवसा वाटून भीतीचें नांवही उरणार नाहीं. तूच शत्रूंचा जेता. तुझा पराजय करण्यास कोण समर्थ आहे ? तुला आमचे पुनः पुनः नमस्कार असोत. २

इंद्राजवळ गोधनादि संपत्ति अपार असल्यामुळें, आपल्या भक्तांना पराक्रमी इंद्राचें औदार्य जरी एकसारखें वैभव अर्पण करीत असतें, तथापि त्याच्या भरपूर दातृत्वाला अथवा संरक्षणशक्तीला कधींहि खंड पडत नाहीं. ३

शत्रूंच्या पुरांचा उच्छेदक इंद्र हाच होय. त्याचें तारुण्य सदोदित टिकणारें आहे. हा बुद्धिवंतांमध्यें श्रेष्ठ आहे. हा एकदम पराक्रमी असाच अवतीर्ण झाला. सर्व कर्मांस याचा आधार आहे. वज्र हें याचें आयुध आहे. इंद्राची स्तुति अनेकांनीं केली आहे. ४

हे वज्रधर इंद्रा, गाईंचा समुदाय **वलानें** हस्तगत केला होता, म्हणून तूं त्याचा कोट फोडून टाकलास. ज्यावेळीं देवांना अतिशय पीडा झाली त्यावेळीं ते न डगमगतां तुझ्या आश्रयास आले. ५

हे शूर इंद्रा, ह्या तुझ्या उदारपणाच्या कृत्यांस भुलून तुझी स्तुती गात गात मी तुझ्याकडे आलों. कारण तूं कृपेचा सिंधु आहेस. इतर स्तोत्रकर्तेहि जवळच उभे होते. त्यांनींही तो तुझा पराक्रम अवलोकन केला. ६

**शुष्ण** इतका हिकमती, परंतु आपल्या युद्धचमत्कारानें तूं त्याचा पराभव केलास. बुद्धिवान् पुरुषांनीं तेंही अवलोकन केलें, म्हणून त्यांच्याही श्रवणार्ह स्तुतींचा तूं आदर कर. ७

आपल्या सामर्थ्यानें जगतावर सत्ता चालविणाऱ्या ह्या इंद्राची अनेक स्तुतींच्या योगानें आराधना झाली. इंद्राचीं उपकारकृत्यें हजारों आहेत, किंबहुना त्यांपेक्षांही त्यांची संख्या अधिक आहे. ८ (२१)

# अनुवाक ४.

## सूक्त १२.

ऋषि, मेधातिथि काण्व । देवता, अग्नि ॥

अग्नि हा देवांचा दूत आहे. अग्नीच्या हातून सर्व देवतांस त्यांचे हवि पोहोंचतात. अग्नि सर्वज्ञ आहे. अग्नि हेंच आमच्या ह्या यज्ञांतील खरें ज्ञानसामर्थ्य आहे. यास्तव आम्ही त्याच्या आगमनाची इच्छा करितों. १

जर कोणा देवतेस पुनः पुनः बोलावणें सर्व लोकांस जरूर वाटत असेल तर तें अग्नीसच होय. कारण हा अखिल मानवांचा राजा आहे. हा सर्व देवतांस हवि पोहोंचावितो. हा सर्वांना प्रिय आहे. २

हे अग्निदेवा, सोमरसांतील दर्भाचीं अग्रेंवगैरे काढून सर्व सिद्धता करून ठेविली आहे हें तुला विदितच आहे. ह्यासाठीं सर्व देवांस इकडे घेऊन ये. त्यांस हवि पोंचविणारा तूं आह्मांस अत्यंत पूज्य वाटतोस. ३

हे अग्निदेवा, ज्यावेळीं दूत होऊन तूं देवांकडे जाशील त्यावेळीं आमच्या हवींविषयीं त्यांचे मनांत इच्छा उत्पन्न करून त्यांस जागृत कर. ह्या दर्भासनांवर देवांसहवर्तमान तूं बिराजमान हो. ४

घृतांच्या हवींनीं उज्ज्वलता धारण करणाऱ्या हे अग्निदेवा, आमच्या शत्रूंचा नाश कर. त्यांनीं राक्षसांशीं सख्य जोडलें आहे. ५

अग्नि एकदां प्रदीप्त झाला कीं तो स्वसामर्थ्यानेंच वृद्धिंगत होत जातो. अग्निदेवाची

बुद्धिमत्ता अपूर्व आहे. गृहांचा खरा अधिपति हाच आहे. ह्याचें तारुण्य अबाधित आहे. ह्याच्याच द्वारें सर्व देवतांस हवि पोहोंचतो. याचें मुख ज्वालामय आहे. ६ ( २२ )

यज्ञामध्यें अग्नीची स्तुती करीत जा. अग्नि हा फार ज्ञाता आहे. सत्य हें त्याचें ब्रीद आहे. सर्व रोगांचें उच्चाटन ह्या अग्निदेवाकडून होतें. ७

हे अग्निदेवा, जो यागकर्ता, तूं देवतांचा दूत ह्मणून, तुझें पूजन करितो, त्याच्या रक्षणाची चिंता वहा. ८

हे सर्वांस पावन करणाऱ्या अग्निदेवा, जो यागकर्ता देवांचा संतोष होण्याकारितां ह्मणून तुझी सेवा करितो त्यास तूं सुखांत ठेव. ९

हे सर्वांस पावन करणाऱ्या दीप्तिमान् अग्निदेवा, आमचा यज्ञ व हवि ह्यांच्या सन्निध देवांस घेऊन ये. १०

अग्निदेवा, तूं असा सर्वविख्यात असल्याकारणानें आह्मी नवीन स्तोत्र गाऊन तुझी स्तुति केली आहे. ह्यास्तव आह्मांस संपत्ति दे. तुझ्या प्रसादानें आह्मांस वीर्यशाली संततिही प्राप्त होऊं दे. ११

हे अग्निदेवा, तुझें तेज अत्यंत उज्ज्वल आहे. तूं आमच्या स्तोत्राचा व जे हवि आह्मी सर्व देवतांस अर्पण करीत आहों त्या हवींचा स्वीकार कर. १२ ( २३ )

---

१ अग्नीच्या बुद्धिमत्तेबद्दल व अक्षय्य तारुण्याबद्दल वेदांत जागोजागीं वर्णन आलेले आहे.

२ ह्या ऋचेचा अन्वय असा करावा—नवीयसा गायत्रेण स्तवानः सः ( त्वं ) रयिं, वीरवतीं इषं च, आभर.

३ ' विश्वाभिः देवहूतिभिः ( सह ) इमं स्तोमं जुषस्व ' असा पदांचा संबंध घेतला पाहिजे.

# सूक्त १३.

॥ ऋषि—मेधातिथि काण्व ॥ देवता—१ इद्ध किंवा समिद्ध अग्नि । २ तनूनपात् । ३ नराशंस । ४ इळ । ५ बर्हि । ६ यज्ञगृहांचीं द्वारे । ७ उषा व नक्त । ८ होतृद्वय । ९ तीन देवी, सरस्वती, इळा, आणि भारती । १० त्वष्टा । ११ वनस्पती । १२ स्वाहाकार ॥

हे अग्निदेवा, आमच्या यज्ञांत मीं हवि सिद्ध करून ठेविला आहे. त्याचा स्वीकार करण्याकरितां तूं प्रदीप्त होऊन सर्व देवांस घेऊन ये. हे पुण्यप्रद देवा, हे हविर्दात्या, आमचा यज्ञ पूर्णतेस ने. १

हे प्रज्ञानशील अग्निदेवा, तूं स्वयंजात आहेस. आमचे हवि देवांस प्राप्त व्हावे म्हणून हा यज्ञ आज देवतासमुदायामध्यें नेऊन त्यांस तो अर्पण कर. ह्यांत मधुर सोमरस सिद्ध करून ठेविला आहे. २

ह्या यज्ञांत आम्ही अग्नीस पाचारण करितों. तो आम्हांस प्रिय आहे. मनुष्यांनीं स्तुति करण्यास तो योग्य आहे. त्याच्या जिव्हेंत माधुर्य आहे, व हवींची पूर्णता त्याच्यामुळें होते. ३

---

१--ह्या सूक्तास ' आप्री ' सूक्त म्हणतात

२ हविष्मते । ३ सुसमिद्धः । ४ होतः ॥

५ तनूनपात् । ६ कृणुहि । ७ मधुमन्तम् ॥

८ नराशंसम् । ९ मधुजिव्हम् । १० हविष्कृतम् ॥

हे अग्निदेवा, तुझें स्तवन सर्वांनीं केलें आहे. तूं हवि पोंचविणारा आहेस. तू सर्व मनुष्यजातीचा हितकर्ता आहेस. अत्यंत सुखदायक अशा रथांत बसवून सर्व देवतांस तूं घेऊन ये. ४

हे सुज्ञ ऋत्विज् हो, ज्यांच्या पृष्ठभागांवर चकाकी मारीत आहे, अशीं दर्भासनें जवळ-जवळ मांडा. त्यांवरच आपणांस अविनाशी रूपाचें दर्शन होणार आहे. ५

यज्ञसिद्ध्यर्थ आज यज्ञमंडपाचीं पवित्र द्वारे त्वकर खुली करा. येथें यागविधींचें उत्तम परिपालन होते, व हीं इतकी विशाल आहेत की, आंत प्रवेश करणाऱ्या पुरुषांना यांची मुळींच अडचण होत नाहीं. ६ ( २४ )

**नक्त** आणि **उषस्** या दोन सुस्वरूप देवतांस ह्या यज्ञांत मी निमंत्रण करितों. त्यांना बसण्याकरितां हे येथें दर्भ पसरले आहेत. ७

त्या दोघां दिव्य, प्रज्ञायुक्त व मधुरभाषी होत्यांनाही मी बोलावितों. ते आमचा यज्ञ सिद्धीप्रत नेवोत. ८

**इळा, सरस्वती** आणि **मही** अशा तीन सौख्यदायिनी अमर देवता या दर्भावर विराजमान होवोत. ९

---

१ ईळितः । २ मनुर्हितः । ३ सुखतमे ॥
४ स्तृणीही । ५ चक्षणम् ॥
६ असश्चतः । ७ ऋतावृधा ॥
८ सुपेशसाः । ९ आसदे ॥
१० सुजिह्वा । ११ यक्षताम् ॥
१२ मयोभुवः । १३ अस्त्रिधः ॥

सर्वदर्शी व सर्वश्रेष्ठ अशा **त्वष्टृ**देवाला आह्मी यज्ञार्थ आमंत्रण करितों. त्याचें केवळ आमच्यावरच प्रेम असो. १०

हे **वनस्पतिदेवा,** देवांस हवीचे दान कर व यज्ञकर्त्यास ज्ञानप्राप्ति होवो. ११

यागकर्त्याच्या गृहांत इंद्राला यज्ञ अर्पण करा. सर्व देवांना मी त्या यज्ञांत आमंत्रण करितों. १२ ( २९ )

## सूक्त १४.

ऋषि, मेधातिथि काण्व । देवता, विश्वेदेव ॥

हे अग्निदेवा, ह्या सर्व देवांसहवर्तमान सोमपानाची इच्छा धरून आमचीं स्तवनें व आमची उपासना यांचा स्वीकार करण्याकरितां इकडे ये, आणि आमचा याग सफळ कर. १

कण्वांनी तुला आमंत्रण केलें होतें. हे प्रज्ञाशाली अग्ने, हीं स्तोत्रेंही तुझी स्तुति गात आहेत. सर्व देवतांना तू घेऊन ये. २

इंद्र, वायु, बृहस्पति, मित्र, अग्नि, पूषा, भग, आदित्य, आणि मरुद्गण, ३

---

१ विश्वरूपम् ।　　२ अप्रियम् ॥

३ सृज. ।　　४ चेतनम् ॥

५ कृणोतन ।　　६ ह्वये ॥

७ दुवः ॥

८ अहूषत ॥

अशा तुह्मां सर्व देवतांकरितां हे सोमरस येथें भरून [1]ठेविले आहेत. ह्याचें प्राशन फार सुखदायक आहे. ह्यामुळें चित्तास फार उल्हास वाटतो. हे मधुर आहेत आणि पात्रांत हे कांठोकाठ भरून ठेविल्यांमुळें बाहेर सांडतील की काय असें वाटत आहे. ४

सोमवल्लीचीं मुळें काढून टाकून व सुंदर हवि तयार करून तुझें पूजन करण्यास हे कण्व बसले आहेत. तूं त्यांचें रक्षण करावें अशी त्यांची इच्छा आहे. ५

जे अश्व तुला आणि सर्व देवांस सोमपानाकरितां घेऊन येतात, ज्यांच्या पाठीं तकतकीत दिसत आहेत, व जे स्वप्रेरणेनेंच तुझ्या रथास नियुक्त होतात, ६ ( २६ )

त्या पुण्यकारक अश्वांस त्यांच्या सहचरींची भेट करीव. ह्या अश्वांच्यामुळें सर्व विधि यथायोग्य चालतात. तर त्यांस, हे मधुर भाषण करणाऱ्या देवा, मधुर सोमरसांचेंही प्राशन करीव. ७

हे अग्निदेवा, ज्या ज्या देवांस यज्ञ समर्पण करणें योग्य आहे व जे जे देव स्तवनार्ह आहेत, त्या सर्वांच्या जिव्हेस या यज्ञांत मधुर सोमरसांचा आस्वाद मिळो. ८

हा विद्वान् यागकर्ता, उषःकालाबरोबर जागृत झालेल्या देवतांना, सुप्रकाशित अशा सूर्यलोकांतून, घेऊन येत आहे. ९

---

१ भ्रियन्त. । २ मत्सराः ३ चमूषद. । ४ द्रप्सा. ॥
५ वृक्तबर्हिषः । ६ अवस्यव. ॥
७ घृतपृष्ठाः । ८ मनोयुजः ॥
९ यजत्रान् । १० ऋतावृधः ॥
११ वषट्कृति ।
१२ विप्रः । १३ आकीं सूर्यस्य रोचनात् ॥

हे अग्ने, **मित्रानें** ह्या भूतलांवर आपली सर्व किरणें फेंकल्याबरोबर इंद्र आणि वायु ह्यांसहवर्तमान येऊन ह्या मधुर सोमरसाचें प्राशन कर. १०

अग्ने, तूं हव्यवाहक आहेस, तूं मनुष्यजातीचा हितकर्ता आहेस, प्रत्येक यज्ञांत तूंच विराजमान होतोस. तूं आमचा यज्ञ सांगतेस ने. ११

हे देवा, आपल्या रक्तवर्ण व चपल अशा घोड्यांना रथास जोड, आणि त्यांचेकडून देवांस येथें घेऊन ये. १२ ( २७ )

## सूक्त १५.

ऋषि–मेधातिथि काण्व ॥ देवता–ऋतु । १ इंद्र । २ मरुत् । ३ त्वष्टा । ४ अग्नि । ५ इंद्र । ६ मित्रावरुण । ७—१० द्रविणोदा । ११ अश्विन । १२ अग्नि ॥

हे इंद्रा, **ऋतू**सहवर्तमान सोमपान कर. हे सोमरसाचे बिंदु तुझ्या उदरांत प्रवेश करोत. यांचें प्राशन केले असतां तुला हर्ष वाटेलँ. तुझें उदर हेंच स्थान त्यांना योग्य आहे. १

हे मरुत् हो, ऋतूसहवर्तमान पात्रांतून सोमपान करा. आमच्या यज्ञास तुमचे हातून पवित्रता येवो. दानशूरतेबद्दल तुमचीच फार प्रसिद्धि आहे. २

---

१ धामभिः ॥

२ सीदसि । ३ यज ॥

४ अरुषीः । ५ हरितः ॥

६ इन्दवः । ७ मत्सरासः ॥

८ पोत्रात् । ९ सुदानवः ॥

